# वीरमणिकण्ठा

{॥ वीरमणिकण्ठा ॥}

करिवरानुज कलियुग वरदा वीरमणिकण्ठा, वीरमणिकण्ठा,

अनाथनाथा दीन बन्धो शबरिगिरीश,

अनाथ नाथ दीन बन्धो शबरि गिरीश

नित्य निर्मला निषाद वीर्या वीर मणिकण्ठ ।

चतुर्मुख पूज्य नाद स्वरूप वीर मणिकण्ठ ।

मदगज वाहा मन्मथ रूपा वीर मणिकण्ठ ।

कलिमल नाशन कीर्तनप्रिय वीर मणिकण्ठ ।

सत्य स्वरूप ताण्डवप्रिय वीर मणिकण्ठ ।

योगानन्द योगि कुल वीर्य वीर मणिकण्ठ ।

मोहिनि सुत मोहन रूप वीर मणिकण्ठ ।

भूमि प्रपञ्च भूसुर रक्षक वीर मणिकण्ठ ।

विल्लरि वीरा विजय कुमारा वीर मणिकण्ठ ।

भक्तवत्सला परम दयाला वीर मणिकण्ठ ।

शबरि गिरीशा सुगुण प्रतापा वीर मणिकण्ठ ।

कोमलरूपा श्यामल वर्णा वीर मणिकण्ठ ।

अनाथ रक्षक आपत्बान्धव वीर मणिकण्ठ ।

मणिमय भूष मञ्जुल भाषा वीर मणिकण्ठ ।

कान्त गिरीशा कानन प्रिय वीर मणिकण्ठ ।

पुण्यश्लोका पुष्कला कान्त वीर मणिकण्ठ ।

शम्बु कुमारा षण्मुख सोदर वीर मणिकण्ठ,

वीरमणिकण्ठा,

अनाथनाथा दीन बन्धो शबरिगिरीश,

अनाथ नाथ दीन बन्धो शबरि गिरीश ॥

Encoded and proofread by Antaratma antaratma at Safe-mail.net

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org